( 2 )

[1]सौवर्णं राजतं वाथ ताम्रं मृण्मयमेव वा ।
यथालब्धं च संगृह्य स्थापयेत् कलशं व्रती ॥

( 3 )

[2]वस्त्रोपरि न्यसेत् सूत्रं सुशुक्लं विधिकोविदः ।

( 4 )

[3]सर्वेषां माण्डलेयानां बीजं चिह्नमथापि वा ।
घटपार्श्वे लिखेद् धीमान्.................................... ॥

( 5 )

[4]तोरणत्रिगुणद्वारार्के स्तम्भोपरि स्थितम् ।
पक्षिणीक्रमशीर्षाभ्यां युक्तं घण्टानिनादितम् ॥

( 6 )

[5]तोरणं वज्रशिखरं तद्बाह्यं चक्रवाटकम् ।
वज्रमालासुरश्म्याढ्यम् ॥

( 7 )

[6]मूलसूत्रस्य चार्धेन गर्भचक्रप्रमाणतः ।
ब्रह्मणो वेदिमात्रं स्याद् वेदिकार्धद्वितीयकः ॥
तृतीया सार्ववेद्या च वेदिकार्द्धेन चापरम् ।
वज्रमालोज्ज्वलं कुर्यात् पञ्चरश्मिविभूषितम् ॥
बाह्यतो गर्भचक्रस्य चतुःसूत्रं समालिखेत् ।
अष्टस्तम्भं लिखेद् गर्भवज्राङ्कितसुशोभनम् ।
नव कोष्ठानि तत्रैव वज्रस्तम्भान्तरान्तरे ॥

---

1. वज्रावली, पृ० 40
2. ,, पृ० 41
3. ,, पृ० 42
4. आचार्यनागबुद्धिपादलिखितागमवचनमिति वज्रावल्याम्, पृ० 63
5. वज्रावली, पृ० 66
6. ,, पृ० 76

## परमाद्यमहायोगतन्त्र

( 1 )

[1]दुष्करैर्नियमैश्चीर्णैर्मूर्तिः शोचति दुःखिता ।
दुःखाहिः क्षिपते चित्तं विक्षेपात् सिद्धिरन्यथा ॥

( 2 )

[2]वज्रं तत्त्वेन संग्राह्य घण्टां धर्मेण वाद्य च ।
समयेन महामुद्रामधिष्ठाय हृदा जपेत् ॥

( 3 )

[3]षडङ्गं भावयेद् योगी स्वाधिष्ठानमहर्निशम् ।
द्रुतं सिद्धिमवाप्नोति उक्तं वज्रभृता स्वयम् ॥

## परमार्थसेवा

( 2 )

[4]सम्राद्(?)दशाधिक्यगुणः सुभिक्षुर्भिक्षोर्दशाधिक्यगुणः सुमन्त्री ।
श्रीब्रह्मचर्येण समाधिना च मैत्र्यादिना तत्त्वसुनिश्चयेन ॥

( 3 )

[5]न श्रीगुरू रक्तपटावृताङ्गो न श्रीगुरुः शिक्खिरिपात्रहस्तः ।
न श्रीगुरुर्दुःखदपांशुकूली न श्रीगुरुः पादपमूलवासी ॥

## बुद्धकपालयोगिनीतन्त्र

( 2 )

[6]प्रज्ञाकमलोदरमध्ये कोटियोजनं मण्डलं त्रिपुटम् ।
तस्मिन् मण्डलमध्ये सुशिष्यं सेचयेद् बुधः ॥

( 3 )

[7]चतुरस्रं चतुर्द्वारं पताकाष्टविभूषितम् ।

1. क्रियासमुच्चय, पृ० 5
2. ,, पृ० 348; वज्रावली, पृ० 206
3. गुह्यसमयसाधनसंग्रह, पृ० 260
4. क्रियासमुच्चय, पृ० 4
5. ,, पृ० 5
6. ,, पृ० 416; वज्रावली, पृ० 239
7. वज्रावली, पृ० 151

( 4 )

[1]शान्तिके चतुरस्रं कुण्डमधोर्ध्वं च वितस्तिकम् ।
पौष्टिकं वर्तुलं कुण्डमधोर्ध्वेन वितस्तित्रयम् ॥
वश्ये त्रिकोणकुण्डमधोर्ध्वेनाङ्गुलाष्टकम् ।
अभिचारेऽर्धचन्द्राकारं कुण्डमधोर्ध्वेन हस्तप्रमाणम् ॥

## महामायोत्तरतन्त्र

( 1 )

[2]....षण्मासतोऽवश्यं मूकीभावप्रसङ्गतः ।
दीप्यतेऽसौ महायोगी योगिनीभिरुपासितः ॥

## मूलतन्त्र

( 2 )

[3]प्रज्ञोपायविधानेन पूजयेद् योगवित् सदा ।

## योगिनीसंचारतन्त्र

( 1 )

[4]प्रथमं समाहितो योगी शक्तिमुत्पाद्य यत्नतः ।
पश्चादुत्पन्नसामर्थ्यो व्रतचर्यां मनेप्सिताम् ॥
पञ्चवर्णसमाचार एकवर्णं तु कल्पितम् ।
निर्विकल्पैकचित्तात्मा भुञ्जीत कामपञ्चकम् ॥
एवं श्रीहेरुकज्ञानी सर्वसिद्धिप्रपूरकः ।
करोति स महाप्राज्ञोऽद्वयज्ञानसुव्रतम् ॥
चर्याव्रतप्रवृत्तस्य ज्ञेयो योगः सुनिश्चितः ।

## लक्ष्याभिधानतन्त्र

( 1 )

[5]ॐ तिष्ठ महाक्रोधावेशाय हूँ श्रीहेरुकाय विद्महे विद्याराजाय धीमहे स्वाहेत्यनेन वीरं प्रचोदयेत् ।

---

1. वज्रावली पृ० 234
2. सुभाषितसंग्रह, पृ० 86
3. गुह्यसमयसाधनसंग्रह, पृ० 257
4. क्रियासमुच्चय, पृ० 374-375; वज्रावली, पृ० 227-228
5. वज्रावली, पृ० 193-194

## वज्रक्रोधसमापत्तिगुह्यतन्त्र

( 1 )

[1]दशोत्तरशतप्रकारं कुण्डं निर्दिष्टं कर्मभेदेन। तद्यथा—शान्तिके परिमण्डलम्, पौष्टिके चतुरस्रम्, अभिचारे त्रिकोणम्, आकर्षणेऽङ्कुशाकारम्, वशीकरणे वज्राकारम्, धन्य(न)धान्याकर्षणे रत्नाकारम्, कामरूपित्वे लिङ्गाकारम्, अन्तर्धाने धनुःशराकारम्, आज्ञाधरे खड्गाकारम्, पापप्रणाशने वृत्तं सतोरणाकारम्, विद्यारागणे कुलमुद्राकारम्, आकाशगमने व्योममण्डलाकारम्, विद्योत्तेजने सज्वालाकारम्, महामण्डलसाधने चक्राकारम्, सर्वधर्मेषु चतुरस्रं चतुर्द्वारं बाह्यमण्डलं सूत्रयित्वा पूर्वतो वज्रखचितं दक्षिणे रत्नखचितं पश्चिमे पद्मखचितमुत्तरे कर्मवज्रखचितमित्यादिकम्।

## वज्रडाकतन्त्र

( 3 )

[2]रजोभूमिद्विगुणं मानं प्रभामण्डलकं बहिः।
तच्चक्रवाटबाह्ये तु वृक्षाद्यष्टश्मशानकम्॥

( 4 )

[3]सोपायं सर्वकर्माणि निर्विकल्पश्चरेत् सदा।
निर्विकल्पेन भावेन व्रतानामुत्तमोत्तमम्॥

## वज्रपञ्जर(तन्त्र)

( 1 )

[4]षडङ्गं भावयेदिति।

( 2 )

[5]गुरोश्छायां न लङ्घयेद् गुरुपत्नीं च पादुकाम्।
सततं ये लङ्घयन्ति ते नराः क्षुरधारिणः॥
सुसिद्धोऽपि महाशिष्यो गुरोराज्ञां न लङ्घयेत्।
इह लोके भवेत् कष्टं परलोके नरकं वसेत्॥

1. वज्रावली, पृ० 232
2. क्रियासमुच्चय, पृ० 96; वज्रावली, पृ० 70
3. ,, पृ० 374; ,, पृ० 226-227
4. गुह्यसमयसाधनसंग्रह, पृ० 262
5. ,, पृ० 267

मायायाश्च प्रयोगेण मिथ्याभक्तिप्रकाशनात् ।
क्षयी कुष्ठी महारोगी जायते नरकादिषु ॥
एवं मत्वा सदा शिष्यो गुरुभक्तिपरायणः ।
साधयेद् विपुलां सिद्धिं गुरोराज्ञाप्रयत्नतः ॥

## वज्रमाला

( 1 )

[1]क्रमशीर्षस्तु पक्षिणी ।

## वज्रामृत(तन्त्र)

( 1 )

[2]तिष्ठते निश्चलं विद्या अमृतं ध्यानमारभेत् ।
ध्यायते परमं तत्त्वममृतं बिन्दुरूपिणम् ॥
खमध्ये शशिसङ्काशं शून्यतत्त्वमुदाहृतम् ।
अक्षयमव्ययं सूक्ष्मं वज्रसत्त्वमनाहतम् ॥
नाभिमध्ये स्थितो देवः कर्णिकागूढगोचरे ।
स्रवते शुक्ररूपेण भगलिङ्गान्तरे स्थितः ॥

## विरुवा(रूपाक्ष)पाद

( 2 )

[3]यावन्नो पतति प्रभास्वरमयः शीतांशुधाराद्रवो
देवीपद्मदलोदरे समरसीभूतो जिनानां गणैः ।
स्फूर्जद्वज्रशिखाग्रतः करुणयाभिन्नं जगद्धारणं
तावच्छ्रीकरुणाबलस्य सहजं जानीहि रूपं विभोः ॥

## वैरोचनाभिसम्बोधितन्त्र

( 1 )

[4]उपायरहितं ज्ञानं शिक्षा वापि हि देशिता ।
श्रावकाणां महावीर अवताराय तेषु वै ॥

1. वज्रावली, पृ० 60
2. महामायातन्त्रटीका ( गुणवती ), पत्र 6b
3. क्रियासमुच्चय, पृ० 357; चर्यागीतिकोशव्याख्या (पृ० 11) में स्वल्प पाठभेद के साथ यह श्लोक सेकोद्देश के वचन के रूप में उद्धृत है । क्या हम कह सकते हैं कि विरूपाक्षपाद ने इस ग्रन्थ की रचना की ?
4. क्रियासमुच्चय, पृ० 5

## सम्पुटतन्त्र

( 7 )

[1]मूलसूत्रस्य चार्धेन गर्भचक्रप्रमाणतः ।
ब्रह्मणो वेदिमात्रं स्याद् वेदिकार्धद्वितीयकम् ॥
तृतीयं सार्ववेद्या च वेदिकार्धेन चापरम् ।
वज्रमालोज्ज्वलं कुर्यात् पञ्चरश्मिविभूषितम् ॥
बाह्यतो गर्भचक्रस्य चतुःसूत्रं समालिखेत् ।
अष्टस्तम्भं लिखेद् गर्भवज्राङ्कितसुशोभनम् ।
नवकोष्ठानि तत्रैव वज्रस्तम्भान्तरे·········।

( 8 )

[2]तच्चाभिषेकं चतुर्विधम्—

प्रथमं कलशाभिषेकं द्वितीयं गुह्याभिषेकतः ।
प्रज्ञाज्ञानं तृतीयं तु चतुर्थं तत्तथा पुनः ॥

## सम्पुटोद्भवतन्त्र(राज)

( 2 )

[3]सप्तत्रिंशात्मके वज्रे ब्रह्मणः सव्यवामयोः ।
सार्धमात्रात् परं त्यक्त्वा द्विसूत्रमध्यमात्रिकम् ॥
हित्वा त्रिमात्रिकं वृत्तं वज्रावल्यर्धमात्रिका ।
रश्मिमालार्धमात्रा स्यान्मात्रात्रयान्तरे पुनः ॥
अर्धमात्रान्तरे वृत्तं तन्मध्ये पद्ममालिका ।
पुनस्त्रिमात्रिकं वृत्तमर्धमात्रान्तरे पुनः ॥
तन्मध्ये चन्द्रमाला च राजभूमिस्त्रिमात्रिका ।

## सर्वतथागतप्रतिष्ठामहायोगतन्त्र

( 1 )

[4]अष्टाङ्गुलादिकेशं च वस्त्राभरणमण्डितम् ।
कृत्वा वज्रधरः कार्यो भिक्षौ वज्रधरे सति ॥
अन्येषां नियमो नास्ति····································· ।

---

1. वज्रावली, पृ० 76
2. ,, पृ० 230
3. क्रियासमुच्चय, पृ० 99-100
4. क्रियासमुच्चय, पृ० 6-7

## संवरार्णव(तन्त्र)

( 1 )

[1]आचार्यस्त्रिविधस्तन्त्रे यथोक्तं संवरार्णवे ।
गृहस्थः श्रामणेराख्यो भिक्षुश्चेति त्रिधा भवेत् ॥
उत्तमो भिक्षुराचार्यो यस्मादुक्तं तथागतैः ।
मध्यमः श्रामणेराख्यो गृहस्थस्त्वधमो मतः ॥
सेकं पञ्चविधं प्राप्तो गृहस्थस्त्वधमो मतः ।
प्राप्तदशाभिषेको हि श्रामणेरस्तु मध्यमः ॥
अग्राभिषेकलब्धो हि भिक्षुरुत्तमो वज्रधक् ।
पञ्चशिक्षापदप्राप्तो दर्शाशिक्षापदैर्युतः ।
कोटिशिक्षापदप्राप्तो न ते तुल्यास्त्रयः स्मृताः ॥

कोटिशिक्षेति पर्यन्तावस्थाशिक्षणाद् युगनद्धसमाधेरभ्यासात् ।

उत्तमे विद्यमाने तु नाराध्या अन्यमन्त्रिणः ।
सत्सु त्रिष्वेकदेशेषु गृहस्थः पूज्यते यदा ।
तदा बुद्धश्च धर्मश्च संघो गच्छत्यगौरवम् ॥

## संवरोदय(तन्त्रम्)

( 1 )

[2]आशु प्रयत्नात् प्रतिपूजनीया मद्यैश्च मांसैश्च हि वज्रदेव्यः ।
ताः पूजिता भक्तिमतो जनस्य श्रीवज्रयानाभिरतिं गतस्य ॥
संतुष्टचित्ता वरदा भवन्ति तासां करस्थानि यतो वराणि ।

## सार्धत्रिशतिका

( 1 )

[3]विरूपान् निर्गुणांश्चापि हीनामप्यधिवासयेत् ।
चतुर्णामप्यनुज्ञातः पर्षदां मण्डले विधिः ॥
शिक्षासु स्वासु युक्तानां महायानरतात्मनाम् ।

---

1. क्रियासमुच्चय, पृ० 3
2. क्रियासमुच्चय, पृ० 414-415
3. क्रियासमुच्चय, पृ० 323; वज्रावली, पृ० 177

( 2 )

[1]चक्रं संलिख्य सम्यक् प्राक् प्रतिष्ठायां त्वयं विधिः ।
प्रतिमापुस्तकादीनां पौरुषान्तस्तु सेकतः ॥
जलमौली तु निष्यन्दः पाको वज्राधिपाह्वया ।
पौरुषोऽत्र जिनैः सेको वैमन्यं गुह्ययोगतः ॥

---

1. वज्रावली, पृ० 164

# बौद्ध पारिभाषिक शब्दों का अभिप्राय

—व्रजवल्लभ द्विवेदी—

[ इस योजना के स्वरूप पर 'धीः' के प्रथम अंक में प्रकाश डाला जा चुका है। प्रथम दो अंकों में प्रधानतः सेकोद्देशटीका तथा अद्वयवज्रसंग्रह से विशिष्ट पारिभाषिक शब्दों की व्याख्याएँ संगृहीत की गई थी। यहाँ साधनमाला, तत्त्वज्ञानसंसिद्धिटीका, दोहाकोशव्याख्या और चर्याकोशव्याख्या में उपलब्ध सामग्री एकत्रित की गई है। ]

**अकरणसंवर**

( पापदेशनानन्तरं ) पुनरकरणसंवरं प्रतिगृह्य । ( सा० मा०, पृ० 55 )

पापदेशनामकरणसंवरम् । ( सा० मा०, पृ० 106 )

पापदेशना-अकरणसंवर....। ( सा० मा०, 138, 173, 193 )

प्रतिदेश्य पुनरकरणसंवरं प्रतिगृह्य । ( सा० मा०, पृ० 201 )

**अध्येषणा**

सत्त्वार्थमा संसारं कुर्वन्तु भगवन्तः संबुद्धास्तत्सुता अपि महाबोधिसत्त्वास्तिष्ठन्तु मामापरिनिर्वाणादिति । ( सा० मा०, पृ० 56 )

जगदर्थमासंसारं कुर्वन्तो भगवन्तस्तथागतास्तत्सुता अपि तिष्ठन्तु मां परिनिर्वान्तु इति ।
( सा० मा०, पृ० 202 )

**अभावः**

अभाव उच्छेदग्रहः । ( त० सं० टी०, पृ० 3 )

**अभिज्ञापञ्चकम्**

पञ्चाभिज्ञाः—दिव्यं श्रोत्रम्, दिव्यं चक्षुः, परचित्तज्ञानम्, पूर्वनिवासानुस्मृतिः, ऋद्धिविज्ञानं च । ( त० सं० टी०, पृ० 27 )

**अमनसिकारः**

न मनसि क्रियत इत्यमनसिकारः, निर्विकल्पकं सहजज्ञानम् । ( दो० को० व्या०, पृ० 62 )

**अयाचितविधिः**

स्वयंग्रहः स्वसंकेतैरन्यैराख्यानमेव वा ।
यत्र नास्ति तमेवाहुरयाचितविधिं बुधाः ॥ ( सा० मा०, पृ० 334 )

**अवधूती**

अवहेलया अनाभोगेन क्लेशादिपापान् धुनोतीत्यवधूती । अवधूत्यवक्रतं मूलं प्रधाननालं येन सा, अवधूतीकृतो मूलनालहेतुरिति शब्दाक्षरम् । ( दो० को० व्या०, पृ० 150 )

अवधूती मध्यदेशे ग्राह्यग्राहकवर्जिता ।। इति ।

ग्राह्यं ज्ञेयम्, ग्राहको ज्ञानम्, ताभ्यां वर्जिता । (दो० को० व्या०, पृ० 151)

**आत्मनिर्यातनम्**

सन्त्रस्तान् दुःखितान् दृष्ट्वा प्रयच्छेदात्मविग्रहम् । ( सा० मा०, पृ० 169 )

**आत्मरक्षा**

पुष्पैकं गृहीत्वा ॐ मणिधरि वज्रिणि महाप्रतिसरे रक्ष रक्ष मां हुँ फट् स्वाहा इति स्वशिरोदेशे पुष्पं क्षिपन्नात्मरक्षां कुर्यात् । पुनः ॐ आः हुँ इत्यात्मरक्षादिमन्त्रः । ( सा० मा०, पृ० 102 )

**आनन्दचतुष्टयम्**

[1]आनन्दास्तत्र जायन्ते क्षणभेदेन भेदिताः ।
क्षणज्ञानात् सुखज्ञानमेवंकारे प्रतिष्ठितम् ।।....
विचित्रे प्रथमानन्दः परमानन्दो विपाकजे ।
विरमानन्दो विमर्दे च सहजानन्दो विलक्षणे ।। ( दो० को० व्या०, पृ० 68 )

**आलिः**

आलिना लोकज्ञानेन । ( च० को० व्या०, पृ० 24 )

**आवेशः**

एवं स्यादावेश उत्कलिका प्रकम्पनं बाष्पः ।
पातो ज्ञानोत्पादः सारूप्यं चापि परिपाट्या ।।

तत्र त्रिविध आवेशः—कायावेशः, वागावेशः, चित्तावेशश्च । तत्र कायावेशे उत्कलिका रोमाञ्चो भवति प्रकम्पनं गात्राणां स्यात्, हर्षाश्रुपातः, भुवि पतित्वा याति । चित्तावेशे ज्ञानोत्पादः स्वरूपप्रतिभानं स्वयमेव स्यात् । वागावेशेऽपूर्वप्रवचनं सारूप्यं सदृशं सर्वज्ञज्ञान-प्रतिपादनम् । ( त० सं० टी०, पृ० 22-23 )

**आसनम्**

आसनं धर्मोदया । ( त० सं० टी०, पृ० 5 )

**उपेक्षा**

केयमुपेक्षा ? प्रतिघानुनयनिबन्धनमपहाय हिताहितेषु सत्त्वेषु परमहिताचरणम् ।

( सा० मा०, पृ० 57 ) ।

---

1. हेवज्रतन्त्र और उसकी टीका देखिये ।

अन्ततोऽसद्वयासङ्गनिवृत्तिरूपसहितां ध्यायादुपेक्षां बुधः ॥ ( सा० मा०, पृ० 97 )
निजकार्यमनालोच्योपेक्षामन्यार्थकारिताम् । ( सा० मा०, पृ० 100 )

कोपेक्षा ? सर्वत्र प्रतिघानुनयरहितपरहितधर्मतायां स्वरसवाहिनी प्रवृत्तिः ।(सा०मा०, पृ०115)

बीजाक्षरमेव मञ्जुघोषरूपेणात्मानं निष्पादयितुमवधाय **अष्टलोकधर्मेषु** उपेक्षणमुपेक्षा ।
( सा० मा०, पृ० 138 )

उपेक्षाम् असद्वयासङ्गपरिहानिस्वभावाम् । ( सा० मा०, पृ० 173 )

कोपेक्षा ? प्रतिघानुनयनिबन्धनमपहाय हिताहितेषु जन्तुषु परमहिताचरणमुपेक्षा, यद्वा सर्वस्मिन् प्रेमानुशयरहितपरहितधर्मतायां स्वरसवाहिनी प्रवृत्तिरुपेक्षा, अथवा लाभालाभयशोऽपयशोनिन्दास्तुतिसुखदुःखेत्याद्य**ष्टलोकधर्म**प्रमुखसकलाप्रस्तुतव्यापारोपेक्षणमुपेक्षा ।
( सा० मा०, पृ० 203 )

क्लेशप्रतिपक्षमार्गोपसंहाराकारामुपेक्षां भावयेत् । ( सा० मा०, पृ० 225 )

मित्रोदासीनशत्रुषु अनुनयप्रतिघविरहाकारा संस्कारसमतया सत्त्वमात्रमेतदित्याकृतिरुपेक्षा ।
( सा० मा०, पृ० 315 )

परदोषोपेक्षामुपेक्षां भावयेत् । ( सा० मा०, पृ० 385 )

**उष्णीषकमलम्**

महासुखं वसत्यस्मिन्निति महासुखवास उष्णीषकमलम् । तत्र सर्वशून्यालयो डाकिनीजालात्मकजालधराभिधानं मेरुगिरिशिखरमित्यर्थः । ( दो० को० व्या०, पृ० 151 )

**एवम्**

शून्यताकरुणाभिन्नरूपिणी महामुद्रेत्थमेवंकारं येन प्रतीयते, तेन योगीन्द्रेण स्कन्धधात्वायतनादीनि प्रतीतानीति । सैव महामुद्रा धर्मकरण्डकरूपा धर्मकायात् । अतस्तेषां करण्डकण्ठानां सैव रसं बोधनं निजप्रभोर्वज्रधरस्य वेश आभरणमलङ्कारः, शोभनमिति यावत् । तथा च हेवज्रे—

[1]एकाराकृति यद्दिव्यं मध्ये वं-कारभूषितम् ।
आलयः सर्वसौख्यानां बुद्धरत्नकरण्डकम् ॥

अन्यत्राप्युक्तम्—

एकारस्तु भवेन्माता वकारस्तु रसाधिपः ।
बिन्दु चानाहतं ज्ञानं तज्जातान्यक्षराणि च ॥ (दो० को० व्या०, पृ० 68)

---

1. हेवज्रतन्त्र और उसकी टीका देखिये ।

**करुणा**

करुणेति संवृतिबोधिचित्तम्, गुरुसम्प्रदायात् । ( च० को० व्या०, पृ० 103 )

करुणा तु कीदृशी ? अगाधापारसंसारसागरमध्ये पतितानन्तसत्त्वधातून् समुद्धरामीत्यध्याशयः । ( सा० मा०, पृ० 57 )

दुःखादुःखनिदानतोऽपि जगतामभ्युद्दिधीर्षां दयाम् । ( सा० मा०, पृ० 97 )

दुःखहेतोर्दुःखाच्च कृपामुद्धर्तुकामनाम् । ( सा० मा०, पृ० 100 )

का करुणा ? या त्रिदुःखदुःखितानां सत्त्वानां संसारसागरादुद्धरणकामना ।(सा० मा०, पृ० 115)

तत्र दुःखाद् दुःखहेतोः समुद्धरणलक्षणा करुणा । ( सा० मा०, पृ० 138 )

करुणां दुःखाद् दुःखहेतोः समुद्धरणकामनाम् । ( सा० मा०, पृ० 172 )

करुणा पुनः कीदृशी ? दुःखाद् दुःखहेतोः समुद्धरणकामना, त्रिदुःखदुःखमहानलप्रज्वलितसंसारलोहभवनप्रविष्टान् जन्तून् ततोऽपि समुद्धरामीत्यध्याशयो वा करुणा, अथवा त्रिदुःखदुःखितानां सत्त्वानां संसाराम्बुधेः समुद्धरणेच्छा । ( सा० मा०, पृ० 203 )

सर्वदुःखापनयाकारां मैत्रीम् ( करुणाम् ) । ( सा० मा०, पृ० 225 )

परदुःखापनयनसमीहा करुणा । ( सा० मा०, पृ० 315 )

परदुःखनाशक्रियां करुणाम् । ( सा० मा०, पृ० 385 )

**कापालिकः**

कं सुखं पालितुं समर्थ इति कापालिकः । ( च० को० व्या०, पृ० 36 )

कं संवृतिबोधिचित्तं पालयतीति कापालिकः । ( च० को० व्या०, पृ० 63 )

**कायतरुः**

रूपादयः पञ्च स्कन्धाः षड् इन्द्रियाणि धातवो विषयाश्च ग्राह्यग्राहकग्रहणोपलक्षितपल्लवत्वात् कायस्तरुवरत्वेन गृहीताः । ( च० को० व्या०, पृ० 2 )

**कालिः**

कालिना लोकाभासेन । ( च० को० व्या०, पृ० 24 )

**कुलम्**

कुमार्गचन्द्रादिकं यस्यामवधूत्यां लयं गच्छति, सा प्रकृतिपरिशुद्धाऽवधूतिका कुलशब्देन बोद्धव्या । ( च० को० व्या० पृ० 126 )

**क्षणचतुष्टयम्**

[1]विचित्रं च विपाकं च विमर्दं च विलक्षणम् ।
चतुःक्षणं समागम्य एवं जानन्ति योगिनः ॥

---

1. हेवज्रतन्त्र और उसकी टीका देखिये ।

विचित्रं विविधं ख्यातमालिङ्गनचुम्बनादिकम् ।
विपाकं तद्विपर्यासं सुखं ज्ञानस्य भुञ्जनम् ॥
विमर्दमारोचनं प्रोक्तं सुखं भुङ्क्ते मयेति च ।
विलक्षणं त्रिभ्योऽन्यद्रागारागविवर्जितम् ॥ ( दो० को० व्या०, पृ० 68 )

**गुणाष्टकम्**

अणिमा, लघिमा, गरिमा, ईषित्वम्, वशित्वम्, कर्तृत्वम्, भोज्यत्वम्, इच्छाप्रकामता— इति गुणाष्टकम् । ( त० सं० टी०, पृ० 27 )

**चतुर्ब्रह्मविहारभावना**

( सप्तविधां पूजामेकादशविधां वा कृत्वा ) मैत्रीकरुणादिचतुर्ब्रह्मविहारभावनां कुर्यात् । ( सा० मा०, पृ० 43 )

मैत्रीकरुणामुदितोपेक्षेति चतुर्ब्रह्मविहारं भावयेत् । ( सा० मा०, पृ० 115 )

ततो निर्मलीभूतचित्तसन्ताने करुणामैत्रीमुदितोपेक्षा भावयेत् । ( सा० मा०, पृ० 138 )

तदनन्तरं चतुर्ब्रह्मविहारं मैत्रीकरुणामुदितोपेक्षासंज्ञकं वक्ष्यमाणक्रमेण भावयेत् । ( सा० मा०, पृ० 202 )

चतुर्ब्रह्मविहारान् भावयेत् । ( सा० मा०, पृ० 385 )

आदौ सत्त्वेषु मैत्रीं हिततनयगतस्नेहरूपां विचिन्त्य
म्लानैकापत्यबोधात् तदनु करुणया भावयन् सर्वसत्त्वान् ।
पश्यंस्तत्सौख्यसम्पद्धरमतिमुदितः सत्परार्थैकमूर्ति
ध्यायात् तत्सर्वसत्त्वेष्वहितहितमतिम्लानशून्यामुपेक्षाम् ॥

( सा० मा०, पृ० 389 )

तद्दुःखोद्धरणा करुणा, सुखप्रतिष्ठापना मैत्री, स्थिरसुखत्वेन मुदिता, तथतारूपत्वोपेक्षा । ( सा० मा०, पृ० 405 )

महाबोधिचित्तमुत्पाद्य सर्वसत्त्वेषु दिव्यसुखोपसंहाराकारां मैत्रीं सर्वदुःखापहाराकारां करुणां तत्सुखाविच्छेदनियमाकारां मुदितां क्लेशोपक्लेशग्राह्यग्राहकाद्यमनसिकारलक्षणामुपेक्षां च भावयेत् । ततो धर्मपुद्गलादिविकल्पकलङ्कवर्जितरूपां शरन्निर्मलमध्याह्नभोनिभामद्वयज्ञानैकरूपां शून्यतां विभाव्य ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमित्यधितिष्ठेत् ।

( सा० मा०, पृ० 474 )

पञ्चोपचारपूजां पापदेशनां च यावदुपेक्षाम् । ( सा० मा०, पृ० 576 )

**चन्द्रम्**

चन्द्रं प्रज्ञाज्ञानम् । ( च० को० व्या०, पृ० 49 )

**चित्तम्**

चित्तसंज्ञा द्विविधा—लौकिकी लोकोत्तरा च। यल्लौकिकं तद्विकल्पलक्षणं निराकरणीयम्। यल्लोकोत्तरं निर्मलं धर्मकायलक्षणं सहजस्वरूपं वा। ( दो० को० व्या० पृ० 92 )

रूपशब्दगन्धरसस्पर्शादिग्राह्यग्राहककल्पनैरनालिप्तं चाचिन्त्यप्रत्ययोदयं सम्यक्संबोधिपदं चित्तं सर्वज्ञतापदम्। ( सा० मा०, पृ० 320 )

**चेल्लः**

चेल्लो दशशिक्षापदी। ( दो० को० व्या०, पृ० 84 )

**च्युतिः**

कलुषं बोधिचित्तं च्युतिरभिधीयते। अत एव विरागोत्पत्तिः, "च्युतेर्विरागसंभूतिर्विरागाद् दुःखसंभवः" इति प्रवचनात्। तदेव दुःखम्, यत्संसारावाहकं कर्म तच्च्युतेरेव संभवति। तथा च—"न विरागात् परं पापं न पुण्यं सुखतः परम्" इति। ( त० सं० टी०, पृ० 2-3 )

**ज्ञानमुद्रा**

केचित्तस्याभासमात्रा सुमनसि जनितादर्शबिम्बोपमा वै
योगीन्द्रैः सेवनीयाः परमजिनसुतैः सेविता या च बुद्धैः।
सा ज्ञानार्चिः प्रवृद्धा दहति सविषयं मारवृन्दं समस्तं
रागादिं चापि काये दहति समसुखं योगिनां वर्षयोगात्॥

( दो० को० व्या०, पृ० 163 )

**डोम्बी**

डोम्बीति परिशुद्धावधूती नैरात्म्या बोद्धव्या। ( च० को० व्या०, पृ० 35 )

डोम्बीति शुक्रनाडिकाऽपरिशुद्धावधूतिका। ( च० को० व्या०, पृ० 65 )

डोम्बी प्रकृतिप्रभास्वरपरिशुद्धावधूतिका ज्ञानमुद्रा। ( च० को० व्या०, पृ० )

**तत्त्वम्**

गुणदोषैः रहित एव परमार्थः। स्वसंवेदनेन केनापि नार्थः प्रयोजनम्। नहि गुणास्तत्रारोपितव्याः, दोषास्तस्मादपनेतव्याः। तथा चोक्तम्—

नापनेयमतः किञ्चित् प्रक्षेप्तव्यं न किञ्चन।
द्रष्टव्यं भूततो भूतं भूतदर्शी विमुच्यते॥ इति।····

तत्त्वं न कुतश्चिदायाति, न कुत्रचिद् याति। न कस्मिन्नपि स्थाने तिष्ठति। तथा चोक्तमष्टसाहस्रिकायाम्—"नहि कुलपुत्र! तथता आगच्छति न गच्छति वा अचलिता तथता एवमेव कुलपुत्र! तथागतस्यागमनं वा गमनं वा न प्रजायते" इत्यादि। एवंभूतमपि तत्त्वं गुरूपदेशेन हृदये संयाति। तत्त्वस्य वर्णरहिततोक्ता परमार्थस्तोत्रे—

न रक्तो हरितो माञ्जिष्ठो वर्णस्तेनोपलभ्यते।
न पीतः कृष्णः शुक्लो वा अवर्णाय नमोऽस्तु ते ॥ इति।

आकृत्या च भुजमुखादिना विहीनः। उक्तं च—

न महान्नापि ह्रस्वोऽपि न दीर्घः परिमण्डलः।
अप्रमाणगतिं प्राप्याप्रमाणाय नमोऽस्तु ते ॥ इति।

तथापि स सर्वैराकारैः सम्पूर्णः—"सर्वाकारवरोपेता शून्यता तथता मता" इति वचनात्।

( दो० को० व्या०, पृ० 69-70 )

इति तावन्मृषा सर्वं यावद् यावद् विकल्प्यते।
तत्सत्यं तत् तथाभूतं तत्त्वं यन्न विकल्प्यते ॥ इति।

किं तद्भवतीति पुनरप्याह—

रूपमस्य मतं स्वच्छं निराकारं निरञ्जनम्।
शक्यं च नहि तज्ज्ञातुमबुद्धेषु कथञ्चन ॥
बुद्धोऽपि न तथा वेत्ति यथाऽयमितरो जनः।
प्रतीत्य तां तु तस्यैव तां जानाति स एव हि ॥ इति।

( दो० को० व्या०, पृ० 91 )

बुद्धेरगोचरतया न गिरां प्रचारो दूरे गुरुप्रथितवस्तुकथावतारः।
तत्तु क्रमेण करुणादिगुणावदाते श्रद्धावतां हृदि पदं [1]स्वयमादधाति ॥

( दो० को० व्या०, पृ० 94)

परमार्थविकल्पेऽपि नावलीयेत पण्डितः।
को हि भेदो विकल्पस्य शुभे वाप्यशुभेऽपि वा ॥
नाधारभेदाद् भेदोऽस्ति वह्निदाहकतां प्रति।
स्पृश्यमानो दहत्येव चन्दनैर्ज्वलितोऽप्यसौ ॥ ( दो० को० व्या०, पृ० 95 )

**तारा**

तारा तर्जनी। ( सा० मा०, पृ० 69 )

**तालः**

तालोऽङ्गुष्ठः। ( सा० मा०, पृ० 69 )

**त्रिशरणगमनम् (रत्नत्रयशरणगमनम्)**

बुद्धं शरणं गच्छामि द्विपदानामग्र्यम्, धर्मं शरणं गच्छामि विरागाणामग्र्यम्, संघं शरणं गच्छामि गणानामग्र्यमिति रत्नत्रयशरणगमनम्। ( सा० मा०, पृ० 55-56 )

---

1, तुलना कीजिये —"नायमात्मा प्रवचनन लभ्यः····वृणुते तनूं स्वाम्" ( मुण्डकोपनिषद् )।

समस्तकालत्रयवर्तिबुद्धाननन्तदिग्व्यापिकृपागुणौघान् ।
प्रहीणदोषार्यगणान् सधर्मानवेत्य भक्त्या शरणं प्रयामि ॥ (सा० मा०, पृ० 116-117)

बुद्धं शरणं गच्छामि यावदाबोधिमण्डतः ।
धर्मं शरणं गच्छामि यावदाबोधिमण्डतः ।
सघं शरणं गच्छामि यावदाबोधिमण्डतः ।
( सा० मा०, पृ० 201-202 )

एषोऽहमाबोधेर्बुद्धं शरणं गच्छामि द्विपदानामग्र्यम्, धर्मं शरणं गच्छामि समग्रं महायानम्, संघं शरणं गच्छामि अवैवर्तिकबोधिसत्त्वगणम् । ( सा० मा०, पृ० 225 )

**धर्मः**

स्वलक्षणधारणाद् धर्मः घटपटस्तम्भकुम्भादिभूतविकारः । तस्य स्वरूपेण नास्ति रूपमिति श्रीहेरुकतन्त्रतत्त्वपटले । ( च० को० व्या०, पृ० 17 )

**धर्माक्षरम्**

अनाहताक्षरमेव धर्माक्षरम् ।····परमविरमौ रागविरागौ कालविकालरूपौ द्वावुपेक्षध्वम् । तत्र धर्माक्षरमुक्तलक्षणं षोडशीकलारूपं मध्ये लक्षयेदिति । ( दो० को० व्या०, पृ० 160-161 )

**धर्मोदयः**

धर्मोदयः सन्ध्याभाषया प्रज्ञाधर्मोदयः ।····पुनरपि सदर्थवेदनेन सम्यग् यथाभूतभावस्य धर्मस्य उदयस्थानं यद्भवति स एव धर्मोदयः । ( च० को० व्या०, पृ० 84 )

**धर्मोदया**

आकाशमहाभूतस्वभावं धर्मोदयाख्यं महावज्रधरस्वभावं शरच्छशधरधवलमधःसूक्ष्मं उपरि विशालं त्रिकोणमन्तर्गगनस्वरूपम् । ( सा० मा०, पृ० 226 )

**धारा**

धाराऽनामिका । ( सा० मा०, पृ० 69 )

**नादः**

प्रज्ञाग्राहकज्ञानविकल्पो नादः । ( च० को० व्या०, पृ० 146 )
नादो रश्मिरेखा । ( सा० मा०, पृ० 153 )

**निरञ्जनः**

निर्गतानि अञ्जनानि रागद्वेषादिक्लेशा अस्मिन्निति निरञ्जनः सहजकायः ।
( दो० को० व्या०, पृ० 149 )

### निर्वाणम्

निश्चलं सर्वसंकल्पवायुभिरचलत्वात्, निर्विकल्पं मुद्रारहितत्वेन, निर्विकारमिन्द्रियातीतत्वात्, उदयान्तगमनरहितत्वेन शरदमलमध्याह्नसंनिभं खसमाकारमेतन्निर्वाणं भण्यते।

( दो॰ को॰ व्या॰, पृ॰ 159 )

निर्वाणं महामुद्रापदम्। ( दो॰ को॰ व्या॰, पृ॰ 160 )

### नैरात्म्ययोगिनी

त्रिनाड्यां चार्पयित्वा निराभासीकृत्य सैव परिशुद्धाऽवधूतिका नैरात्म्ययोगिनी।

( च॰ को॰ व्या॰, पृ॰ 14 )

### पञ्चमण्डलम्

जानुद्वयकरद्वयशिरोभिः कृतनमस्कारमित्यर्थः। ( त॰ सं॰ टी॰, पृ॰ 24 )

### पापदेशना

यत्किञ्चिदस्यां जातावन्यासु वा जातिष्वनादिनिधने जातिसंसारे संसरता मया पापकं कर्म कायेन वाचा मनसापि कृतं कारितं क्रियमाणमनुमोदितं तत्सर्वं भगवतां त्रैलोक्यमहोत्सवानां गुरुबुद्धबोधिसत्त्वानां पुरतः प्रतिदेशयामीति। ( सा॰ मा॰, पृ॰ 55 )

द्वेषाच्च रागादथ मोहतोऽपि कायेन वाचा मनसाऽन्यतोऽपि।
पापं कृतं कारितमेव यत्तत् सर्वं जिनानां पुरतो दिशामि॥ (सा॰ मा॰, पृ॰ 116)
मन्त्री शुभाभिवृद्ध्यर्थं कुर्यात् पापस्य देशनाम्। ( सा॰ मा॰, पृ॰ 169 )

यत्किञ्चिदनादिसंसारे संसरता मया पापकं कर्म कायेन वाचा मनसाऽपि कृतं कारितं क्रियमाणमनुमोदितं वा तत्सर्वं प्रतिदेशयामि। ( सा॰ मा॰, पृ॰ 201 )

सर्वमात्मनः पापं प्रतिदेशयामि। ( सा॰ मा॰, पृ॰ 225 )

यत्कृतं मया पापकं कर्म कारितमनुमोदितं तदद्य भगवत्याः प्रत्यक्षतो देशितं सर्वमिति।

( सा॰ मा॰, पृ॰ 373 )

### पुण्यपरिणामना

सप्तविधानुत्तरपूजया यदेव कुशलमुत्पन्नं तदेव संबोधये परिणामयामीति। (सा॰ मा॰, पृ॰ 56)

सप्तविधानुत्तरपूजापापदेशनाकुशलमूलमुपजातं तत्सर्वं सम्यक्संबोधये परिणामयामीति।

( सा॰ मा॰, पृ॰ 202 )

सर्वं चात्मनः कुशलमनुत्तरायां सम्यक्संबोधौ परिणामयामि। ( सा॰ मा॰, पृ॰ 225 )

### पुण्यानुमोदना

संबुद्धप्रत्येकश्रावणबुद्धानां तत्सुतानामपि बोधिसत्त्वानां सत्त्वानामपि त्रैलोक्योदरवर्तिनां यदेव कुशलं तत्सर्वमनुमोदयामीति। ( सा॰ मा॰, पृ॰ 55 )

पुण्यं च यत् सर्वतथागतानामन्यच्च संबोधिसमाश्रितानाम् ।
प्रत्येकबुद्धस्य च सद्गुरूणां सर्वं जिनानां स्वनुमोदयामि ॥

( सा० मा०, पृ० 116 )

ततोऽनुमोद्य सम्बुद्धबोधिसत्त्वगणस्य च ।
शैक्षाशैक्षादिसत्त्वानां कृत्स्नं पुण्यं स्वभावतः ॥ ( सा० मा०, पृ० 169 )

सुगतप्रत्येकश्रावकजिनानां तत्सुतानामपि बोधिसत्त्वानां सदेवकसब्रह्मकलोकानां यत् कुशलं तत् सर्वमनुमोदयामीति । ( सा० मा०, पृ० 201 )

सर्वबुद्धबोधिसत्त्वार्यपृथग्जनानां सर्वकुशलमनुमोदे । ( सा० मा०, पृ० 225 )

**पूजा**

तद्रश्मेरेव निर्गतपुष्पधूपदीपगन्धचूर्णचीवरच्छत्रध्वजघण्टापताकादिभिस्तेषां च बाह्याध्यात्म-पूजादिभिः संपूजनं पूजा । ( सा० मा०, पृ० 116 )

दशदिक्षु स्थिता बुद्धा बोधिसत्त्वाश्च नायकाः ।
तेभ्यो नानाविधां पूजां कृत्वा पुष्पादिभिर्धिया ॥ ( सा० मा०, पृ० 169 )

तदनु तेषामाकाशदेशावस्थितानां महाकारुणिकानां बुद्धबोधिसत्त्वानां दिव्यपुष्पधूपगन्ध-माल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकादिभिर्महती पूजा । ( सा० मा०, पृ० 201 );

स्वहृदि आदिस्वरसंभूतचन्द्रमण्डलस्थमष्टमं बीजं तस्योद्भवपञ्चोपचारपूजान्वितो नानाविध-देवीः पूजाभ्रजालविसरैः पूजयेदिति पूजा । ( सा० मा०, पृ० 373 )

**प्रज्ञा**

प्रज्ञा पङ्कजम् । ( त० सं० टी०, पृ० 9 )

**प्रणामश्लोकः**

लोकधातुष्वनन्तेषु यावन्तः ससुता जिनाः ।
कायेन मनसा वाचा तान् सर्वान् प्रणमाम्यहम् ॥ ( सा० मा०, पृ० 2 )

**बिन्दुः**

दीर्घहूंकारमुपायग्राहकज्ञानविकल्पं बिन्दुरिति । ( च० को० व्या०, पृ० 146 )

**बोधिचित्तम्**

बोधिचित्तं सांवृतस्पन्दरूपं शुक्रम् । ( दो० को० व्या०, पृ० 150 )

[1]शून्यताकरुणाभिन्नं बोधिचित्तमिति स्मृतम् । ( सा० मा०, पृ० 111 )

---

1. यह गुह्यसमाज का वचन है ।

**बोधिचित्तोत्पादः**

उत्पादयामि सम्बोधौ चित्तं बोधाय देहिनाम् ।
भद्रचर्यां चरिष्यामि सर्वसत्त्वहितोदयाम् ॥ ( सा॰ मा॰, पृ॰ 3 )
इत्थं मयोपार्जितपुण्यवृन्दादुत्पादयाम्येष सुबोधिचित्तम् । (सा॰ मा॰, पृ॰ 117)

अहो बताहमनुत्तरां सम्यक्संबोधिमभिसंबुद्धेयं सर्वं सर्वसत्त्वानामर्थाय हिताय सुखाय यावदत्यन्तनिष्ठे निर्वाणधातौ बुद्धबोधौ प्रतिष्ठापनाय च । ( सा॰ मा॰, पृ॰ 225 )

भवसागरे पतितान् सत्त्वान् तेषामुद्धरणं कर्तुं चित्तवज्रं श्रेष्ठं करोम्यहमिति बोधिचित्तोत्पादः । ( सा॰ मा॰, पृ॰ 373 )

**बोधिसत्त्वः**

अस्योत्पादादुत्पादितं बोधिचित्तं बोधिसत्त्व इत्युच्यते । ( सा॰ मा॰, पृ॰ 111 )

**भयाष्टकम्**

सिंहहस्तिवह्निसर्पचौरनिगडजलेभ्यो भयम् । ( त॰ सं॰ टी॰, पृ॰ 26 )

**भवः**

संवृतिबोधिचित्तो हि भवः । ( च॰ को॰ व्या॰, पृ॰ 70 )

**भावः**

भावः शाश्वतग्रहः । ( त॰ सं॰ टी॰, पृ॰ 3 )

**भावाः**

अण्डजा जरायुजा उपपादुका संस्वेदजा देवासुरादिप्रकृतिकाः सर्वे भावाः स्वभावेन परिशुद्धा योगीन्द्रस्य । ( च॰ को॰ व्या॰, पृ॰ 32 )

**भिक्षुः**

भिक्षुः कोटिशिक्षापदी । ( दो॰ को॰ व्या॰, पृ॰ 84 )

**मण्डलम्**

तथा च गुटिकातन्त्रे—

सर्वाङ्गभावनातीतं कल्पनाकल्पवर्जितम् ।
मात्राबिन्दुसमायुक्तमेतन्मण्डलमुत्तमम् ॥ ( दो॰ को॰ व्या॰, पृ॰ 158 )

**मध्या**

मध्या शिखी । ( सा॰ मा॰, पृ॰ 69 )

**मार्गाश्रयणम्**

मार्गः संबुद्धोक्तः । स चाश्रयणीयो मया नान्य इति । ( सा॰ मा॰, पृ॰ 56 )
संश्रित्य जैनं परिशुद्धमार्गं ब्रह्मेन्द्ररुद्रप्रभृतिष्वनर्घम् । ( सा॰ मा॰, पृ॰ 117 )

मार्गस्तथागतोक्तः। स चाश्रयणीयो मया नान्य इति। ( सा० मा०, पृ० 202 )

एषोऽहमनुत्तरसम्यक्संबोधिमार्गमाश्रयामि यदुत वज्रयानम्। ( सा० मा०, पृ० 225 )

**मुदिता**

मुदिता पुनः कीदृशी ? धातुत्रयावस्थितानां सत्त्वानां यानि सुचरितानि तेषु तद्भोगैश्वर्यादिषु हृष्टचित्तता। ( सा० मा०, पृ० 57 )

चित्तप्रीतिविशेषलक्षणवतीं संमोदिकाम्। ( सा० मा०, पृ० 97 )

नित्यं सद्गुणसंयोजनेच्छां प्रमुदितां तथा। ( सा० मा०, पृ० 100 )

का मुदिता ? उत्पादितकुशलमूलपरयोगैश्वर्यादिषु हृष्टचित्तता। ( सा० मा०, पृ० 115 )

व्यवसायसंसिद्ध्युपायदर्शनात् प्रहर्षणं मुदिता। ( सा० मा०, पृ० 138 )

मुदितां प्रमोदरूपाम्। ( सा० मा०, पृ० 172-173 )

मुदिता तु ईदृशी—प्रमोदो मुदिता, अथवाऽसदृशे बुद्धत्वे तदुपाये च सर्व एव संसारिणः सत्त्वा मया प्रतिष्ठापयितव्या इत्यध्याशयो मुदिता, यद्वा विश्वेषां यानि कुशलानि तेषु तद्भोगैश्वर्यादिषु च आकृष्टचित्तता। ( सा० मा०, पृ० 203 )

दिव्यसुखावियोगनियमाकारां मुदिताम्। ( सा० मा०, पृ० 325 )

मोदन्तां सत्त्वा इत्याकारा मुदिता। ( सा० मा०, पृ० 315 )

परसुखतुष्टिं मुदिताम्। ( सा० मा०, पृ० 385 )

**मेरुगिरिः**

वरः श्रेष्ठो गिरिः कङ्कालरूपो मेरुगिरिः। तथा च सम्पुटे—

स्थितः पादतले वायुर्भैरवो धनुराकृतिः।<br>
स्थितोऽस्ति कटिदेशे तु त्रिकोणोद्धरणस्तथा॥<br>
वर्तुलाकाररूपो वरुणस्त्रिदले स्थितः।<br>
हृदये पृथिवी चैव चतुरस्रा समन्ततः॥<br>
कङ्कालदण्डरूपो हि सुमेरुर्गिरिराट् तथा। ( दो० को० व्या०, पृ० 156 )

**मैत्री**

तत्रेयं मैत्री सर्वसत्त्वेषु अतिशयितहितैकपुत्रस्नेहलक्षणा। ( सा० मा०, पृ० 57 )

सत्त्वेष्वेकतनुजतोषसमतासंलक्षितां मित्रताम्। ( सा० मा, पृ० 97 )

मैत्रीं सत्पुत्रसम्प्रीतिसहस्रगुणितां जने। ( सा० मा०, पृ० 100 )

का मैत्री ? या सर्वसत्त्वेष्वेकपुत्रप्रेमता। ( सा० मा०, पृ० 115 )

जगदेकपुत्रप्रेमलक्षणा मैत्री। ( सा० मा०, पृ० 138 )

मैत्रीं सर्वसत्त्वेष्वेकपुत्रप्रेमतालक्षणाम्। ( सा० मा०, पृ० 172 )

तत्र केयं मैत्री ? सर्वसत्त्वेष्वेकपुत्रप्रेमतालक्षणा, अथवा हितसुखोपसंहाराकारेति ।
( सा० मा०, पृ० 202, 203 )

सर्वसत्त्वेषु सुखोपसंहाराकारां मैत्रीम् । ( सा० मा०, पृ० 225 )

परसौख्यसम्पदिच्छा मैत्री । ( सा० मा०, पृ० 315 )

परहितचिन्तां मैत्रीम् । ( सा० मा०, पृ० 385 )

**याचना**

निरुत्तरधर्मदेशनां भगवन्तस्तथागता देशयन्तु, यया त्वरितमेव सत्त्वाः संसारागाधसागरं तरन्तीति । ( सा० मा०, पृ० 56 )

तादृशीं निरुत्तरां धर्मदेशनां भगवन्तस्तथागता देशयन्तु, यया झटित्येव संसारिणः सत्त्वा भवबन्धनान्निर्मुक्ता भवन्तीति । ( सा० मा०, पृ० 202 )

**युगनद्धः**

एकः स्वाभाविकः कायः शून्यताकरुणाद्वयः ।
नपुंसकमिति ख्यातो युगनद्ध इति क्वचित् ॥ ( सा० मा०, पृ० 505 )

**रत्नम्**

रतिमनन्तसुखं तनोतीति रत्नं चतुर्थानन्दं बोद्धव्यम् । ( च० को० व्या०, पृ० 133 )

**रसना**

दक्षिणनासापुटे उपायसूर्यस्वभावेन रसना स्थिता । तथा च हेवज्रे—रसनोपायसंस्थिता ।
( दो० को० व्या०, पृ० 151 )

**ललना**

वामनासापुटे प्रज्ञाचन्द्रस्वभावेन ललना स्थिता । तथा च हेवज्रे—ललना प्रज्ञास्वभावेन ।
( दो० को० व्या०, पृ० 151 )

**वज्रम्**

परमाद्यं वज्रम् । परममुत्कृष्टत्वात्, आद्यं सुखस्यादिकारणभूतत्वात्, तदेव पात्रम्, सुखस्याधारभूतत्वाद् विद्यापङ्कजमेवाभिधीयते । अवधूतीगतं यदा बोधिचित्तं भवेत् तदा वज्रमभिधीयते । ( त० सं० टी०, पृ० 7 )

**वज्रधरः**

वज्रं द्रव्यं धारयतीति वज्रधरो मदनसहितनृकपालः····वज्रमद्वयज्ञानं धारयतीति वज्रधरः ।
( त० सं० टी०, पृ० 9 )

**वज्रधरहृदयम्**

वज्रम् अभेद्यज्ञानम्, तद् धारयतीति वज्रधरः सम्यक्संबुद्धः, तस्य हृदयमप्रकाश्यत्वाद् धर्मोदयाऽभिधीयते । ( त० सं० टी०, पृ० 6 )

**वज्रयोगिनी**

वज्रम् अनुपलम्भज्ञानम्, तेन सह योगोऽस्या अस्तीति । ( त० सं० टी०, पृ० 4 )

**वन्दना**

स्वहृद्बीजरश्मिभिरेव निर्गतसमस्ताकाशदेशव्यापिगुरुबुद्धबोधिसत्त्वान् स्फुरणसंहरणाकारेण जगदर्थक्रियाकरणैकपरान् दृष्ट्वा स्वहृद्बीजकिरणैरेव दिव्यगन्धपुष्पप्रकरादिकं निश्चार्य मण्डलपूर्वकं कृताञ्जलिना गुरुबुद्धबोधिसत्त्वचरणकमलविन्यस्तमूर्ध्ना प्रणामना वन्दना ।

( सा० मा०, पृ० 115-116 )

पूजयित्वा परमकारुणिको योगी भक्तिनम्रः कायवाक्चित्तेन वन्दयेदिति वन्दना ।

( सा० मा०, पृ० 373 )

**वामहस्तः**

हस्तो धारणकर्मा, तत्साधर्म्याद् हस्तो वामः, वामनासिकापुटस्थितः ( श्वासः ) ।

( त० सं० टी०, पृ० 11 )

**वाराही**

वरं बोधिचित्तम् आहिनोतीति वाराही । हि गतौ । आङ्पूर्वकात् संज्ञायामण्, पृषोदरादित्वादात्वम् । महासुखस्थितं भगवन्तमन्वेतीत्यर्थः । ( त० सं० टी०, पृ० 2 )

**वीरचर्याव्रतम्**

वीरचर्याव्रतमेव यौवराजव्रतचर्येति वज्रकापालिकचर्याव्रतमिति चोक्तं श्रीसम्पुटतन्त्रे ।

( वज्रावली, पृ० 219 )

**वीराः**

प्रज्ञारविन्दैर्यैर्योगीन्द्रैर्निरञ्जनरूपेणावगतम्, तेऽस्मिन् भवमण्डले विषयारिविमर्दनाद् वीराः ।

( च० को० व्या०, पृ० 70 )

**शून्यचतुष्टयम्**

शून्य-अतिशून्य-महाशून्य-सर्वशून्यमिति चतुःशून्यस्वरूपेण पत्रचतुष्टयम् ।

( दो० को० व्या०, पृ० 151 )

**शून्य तत्त्वम्**

अहमपि शून्यम्, विकल्पगोचरत्वात् । जगदपि शून्यं विकल्पमात्रमेव । त्रिभुवनमपि शून्यम् । निर्मले मलरहिते सहजे महासुखम् । न पापं न पुण्यं संभवति । तथा चोक्तम्—

अनाविलमहाज्ञाने ज्योतीरूपप्रभास्वरे ।
पापपुण्यकथा कुत्र विकल्पागोचरे शुभे ॥ ( दो० को० व्या०, पृ० 71 )

**षड् दर्शनानि**

षड् दर्शनान्युच्यन्ते—ब्रह्म-ईश्वर-अर्हन्त-बौद्ध-लोकायत-सांख्याश्च । (दो० को० व्या०, पृ० 72)

**षष्ठजिनः**

षष्ठो जिनो वज्रसत्त्वो द्रव्यमभिधीयते, ततस्तदुत्पत्तेः, कारणे कार्योपचारात् ।····षष्ठो वज्रसत्त्वः । तदुत्पत्तिहेतुत्वाद् बोधिचित्तमेव वज्रसत्त्वोऽभिधीयते, कारणे कार्योपचारात् । तेनोपलक्षणभूतेन । न तु प्रज्ञाकमलोदरगतं बोधिचित्तं विधेयम्, तदा महासुखसंभवात् । तथा चादिबुद्धे—

पतिते बोधिचित्ते तु सर्वसिद्धिनिधानके ।
मूर्च्छिते स्कन्धविज्ञाने कुतः सिद्धिरनिन्दिता ॥

( त० सं० टी०, पृ० 6 )

**समतायोगः**

एकस्वभावस्तु महासुखभाव एव योगीश्वरस्य समतायोगः । ( च० को० व्या०, पृ० 158 )

**समयः**

समयो मन्त्रतन्त्रमुद्रादिः । ( वज्रावली, पृ० 180 )

**सर्वधर्मप्रकृतिपरिशुद्धता**

चतुःप्रमाणभावनानन्तरं सर्वधर्मप्रकृतिपरिशुद्धतां चिन्तयेत्—सर्व एवामी धर्माः प्रकृत्या स्वरूपेण परिशुद्धाः, अहमपि प्रकृतिपरिशुद्ध इत्यादिकमामुखयेत् । इमामेव सर्वधर्मप्रकृति-परिशुद्धतां ॐ स्वभावशुद्धाः सर्वधर्माः स्वभावशुद्धोऽहमित्यनेन दृढीकुर्यात् ।

( सा० मा०, पृ० 57-58 )

चतुर्ब्रह्मविहारभावनानन्तरं सर्वधर्मप्रकृतिपरिशुद्धतां भावयेत् । सर्व एव धर्माः प्रकृत्या स्वभावेन परिशुद्धाः, अहमपि प्रकृतिपरिशुद्ध इत्यादिकमामुखीकुर्यात् । इमां च सर्वधर्मप्रकृति-परिशुद्धतामनेन मन्त्रेणाधितिष्ठेत्—ॐ स्वभावशुद्धाः सर्वधर्माः स्वभावशुद्धोऽहमिति ।

( सा० मा०, पृ० 203 )

**सर्वधर्मशून्यता**

सर्वधर्मप्रकृतिपरिशुद्धतामामुखीकृत्य सर्वधर्मशून्यतां ध्यायात् । तत्रेयं शून्यता—मनोमात्रमेवेदं तेन तेनाकारेण प्रकाशात्मकं प्रतिभासते । यथा स्वप्ने नास्ति मनसो बाह्यं मनोग्राह्यम् । ग्राह्याभावाद् ग्राहकमपि मनो नास्ति । ततश्च मनःस्वरूपाः सर्वधर्माः । तेषां ग्राह्यग्राहकादि-सकलकल्पनाप्रपञ्चशून्यता तत्त्वम्, परमार्थ इति यावत् । अयमर्थः—अद्वैतप्रकाशमात्रात्मकं सचराचरं जगदिति चिन्तनीयम् । इमामेव शून्यतां ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽ-हमित्यमुना मन्त्रेणाधितिष्ठेत् । ( सा० मा०, पृ० 58 )

सर्वधर्मप्रकृतिपरिशुद्धतां विभाव्य सर्वधर्मशून्यतां विभावयेत्। तत्रेयं शून्यता—ग्राह्यग्राहकादिसकलकल्पनाप्रपञ्चवञ्चितचित्राद्वैतप्रकाशमात्रात्मकं सचराचरं विश्वमिति चिन्तयेत्। इमामेव शून्यतामनेनापि मन्त्रेणाधितिष्ठेत्—ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति।

( सा० मा०, पृ० 204 )

ततः सर्वधर्मान् मनसाऽवलम्ब्य विचारयेत्। चित्तमेवैतत् तेन तेनाकारेण भ्रान्तं प्रतिभासते। यथा स्वप्ने नास्ति चित्ताद् बाह्यचित्तं ग्राह्यग्राहकाभावात् चित्तमपि ग्राहकं भवति तस्माच्चित्तशरीराः सर्वधर्माः। तेषां ग्राह्यग्राहकशून्यता परमार्थं इत्येवमेकान्तेन निश्चित्य भ्रान्तिसमारोपितं भ्रान्तिचिह्नं सर्वधर्माणामाकारमपहाय तेषां प्रकृतिमेव केवलामद्वयविज्ञप्तिलक्षणां शुद्धस्फटिकसंकाशां शरदमलमध्याह्नगगनोपमामनन्तां पश्येत्। इदमुच्यते लोकोत्तरं शून्यताज्ञानं निष्प्रपञ्चं निर्विकल्पम्। ततस्तन्मन्त्रेणाधितिष्ठेत्—ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। सैव भगवती प्रज्ञापारमिता सैव परमा रक्षा। ( सा० मा०, पृ० 225-226 )

**सहजम्**

[1]कक्कोले बोलकं क्षिप्त्वा कुन्दुरुं कुरुते व्रती।
तस्मिन् योगसमुद्भूतं कर्पूरं सहजं स्मृतम्॥ ( दो० को० व्या०, पृ० 69 )

चण्डालीयोगभावनया महासुखचक्रे चित्तस्थिरीकरणं हि सहजस्फुटीकरणकारणमिति।

( दो० को० व्या०, पृ० 71 )

सहजस्य परिज्ञानेऽन्यं मोक्षं न किञ्चिदस्ति।....अन्यैः सर्वैर्मोक्षसमूहं यत् परिकल्पितं पृथक् पृथक् तत्सर्वं सहजमेवेति नान्यत्। ....सहजमजानानाश्च भ्रमन्ति संसारे घटीयन्त्रवत्। स च सद्गुरुपर्युपाश्रितेनोपलभ्यते। तत्र सहजे वाच्यवाचकौ न लभ्येते—

वाच्यवाचकसंबन्धान्न विद्येत् सहजस्त्रिषु।
देशनापदयोगेन स्थापितं भगवता क्वचित्॥
पुस्तके दृश्यमाने च सत्त्वार्थाय न संविदाम्।
यद् यद् द्रक्ष्यति वस्तुश्च भ्रान्तिरूपादिकल्पना॥
तत्तद्वस्तु न दृश्येत अभ्रान्तं गुरुपर्वया। इति।

....यत्किञ्चित् शास्त्रपुराणादिव्याख्यानं क्रियते, तत् सर्वं सहजस्यैव नान्यस्य।

( दो० को० व्या०, पृ० 86-87 )

सहजमेकं परं तत्त्वमस्ति। ( दो० को० व्या०, पृ० 155 )

---

1. हेवज्रतन्त्र और उसकी टीका देखिये।

**सिद्धयष्टकम्**

अञ्जन-गुटिका-पादुका-सिद्धौषधि-मणि-मन्त्र-यक्षस्त्री-परपुरप्रवेशाख्यम् ।

( त० सं० टी०, पृ० 27 )

**सूर्यम्**

सूर्यम् उत्पादाद्वयज्ञानम् । ( च० को० व्या०, पृ० 49 )

**स्थविरः**

स्थविरो यो दशवर्षोपपन्नः । ( दो० को० व्या०, पृ० 84 )

**हरिणी**

षड् विषयान् भवग्रहान् हरति खण्डयतीति हरिणी । सन्ध्याभाषया सैव ज्ञानमुद्रा ।

( च० को० व्या०, पृ० 21 )



# बौद्ध तन्त्रों में पीठोपपीठादि का विवेचन (२)

—बनारसी लाल—

पीठों के अध्ययन-क्रम में यह ध्यान देने की बात है कि जो 24 पीठ बाह्य मण्डल में, हैं वे देहस्थ भी हैं। जिस प्रकार बाह्य पीठों में डाकिनियाँ एवं वीरेश्वरियाँ स्थित हैं, उसी तरह देहस्थ पीठों में भी ये स्थित हैं। बौद्ध तन्त्रों में विशेषकर ज्ञानोदय तन्त्र, हेरुकाभिसमय एवं अभिसमय-मञ्जरी में बाह्य मण्डल के साथ अध्यात्म मण्डल, दश भूमियाँ, दश ज्ञान, तत् तत् पीठों में स्थित डाकिनियां, वीरेश्वरियाँ एवं दश पारमिता आदि को काय, वाक् और चित्त चक्र (हेरुक रूप) में विभाजित किया है। तदनुसार प्रत्येक चक्र में उसकी भावनाविधि बतलाई गई है। भावना की जो विधि है, तदनुसार 'स्वभावशुद्धाः सर्वधर्माः स्वभावशुद्धोऽहमिति, प्रकृतिपरिशुद्धाः सर्वधर्माः प्रकृतिपरिशुद्धोऽहमिति' की भावना कर स्वदेह को मण्डल में स्थित देवता 'हेरुक' रूप में परिवर्तित कर प्रथमतः चित्त, वाक् फिर काय चक्र की भावना करनी चाहिये। इन तीनों चक्रों के स्वरूप का वर्णन आगे किया जा रहा है।

यद्यपि नामभेद से पीठों की संख्या बढ़ जाती है, जिसे 'धीः' प्रथमांक में दिया जा चुका है। तथापि हेवज्रतन्त्र को छोड़ कर अन्य सभी में 24 ही पीठों का वर्णन पाया जाता है। इसी क्रम में इन पीठों के बोधक बीजाक्षर भी हैं। प्रत्येक चक्र के भावना-क्रम में भूमियाँ, पारमिताएँ, ज्ञान, पीठ स्थान, वीरेश्वरियाँ एवं डाकिनियाँ व्यवस्थित हैं।

## चक्रों की व्यवस्था

### I चित्तचक्र

अष्टार नीलवर्ण वज्रावली चित्तचक्र का स्वरूप है। पीठों में पूर्व में पुल्लीरमलय, पश्चिम दिशा में जालन्धर, उत्तर में ओडियान एवं दक्षिण में अर्बुद स्थित हैं। आग्नेय में गोदावरी, नैऋत्य में रामेश्वर, वायव्य में देवीकोट और ऐशान्य में मालव स्थित हैं। इन आठ पीठ-उपपीठों में स्वदेहस्थ चित्तचक्र में शिर, शिखा, दक्षिण कर्ण, पृष्ठवंश, वाम कर्ण, भ्रूमध्य, चक्षुर्द्वय, बाहूमूल क्रमशः स्थित हैं। इन प्रत्येक पीठ-उपपीठों में खण्डकपाली, महाकङ्काल, कङ्काल, विकटदंष्ट्री, स्वरवैरिण, अमिताभ, वज्रप्रभा एवं वज्रदेह डाकिनियां क्रमशः स्थित हैं। स्वदेहस्थित चित्तचक्र या अध्यात्म-मण्डल में क्रमशः नाडियां स्थित हैं। ये नाडियां हैं—अजनाडी, नाडी, महानाडी, नाडी, रजानाडी, पटानाडी, भगनाडी, छोतानाडी एवं महानाडी, जो क्रमशः नखदन्तवाह, केशरोमवाह, त्वग्वाह, मांसवाह, स्नायुवाह, अस्थिवाह, रक्तवाह, हृदयवाह कृत्यात्मक हैं। बाह्य चित्तचक्र में ये नाडियां

प्रचण्डा, चण्डाक्षी, प्रभामती, महानासा, विरमती, खर्वरी, लंकेश्वरी एवं द्रुमच्छाया वीरेश्वरियों के रूप में स्थित हैं। चित्तचक्र का बोधक मन्त्र 'हूँ' है, जो धर्मकाय को भी द्योतित करता है। इस चक्र में स्थित डाकिनियां एवं वीरेश्वरियां खेचरी हैं तथा स्वर्गलोकवासिनी हैं। इसे अधिक स्पष्ट करने के लिए ( पृष्ठ 68-69 ) एक तालिका प्रस्तुत की जा रही है। चित्तचक्र को तालिका में 1 से 8 तक के क्रमों द्वारा जाना जा सकता है।

**II वाक्चक्र**

वाक्चक्र का स्वरूप रक्तपद्मावली है। इसके अन्तर्गत क्षेत्र, उपक्षेत्र, छन्दोह, उपछन्दोह के पीठ स्थान संगृहीत हैं। इस चक्र में प्रथमतः पूर्व में कामरूप, उत्तर में ओड्र, पश्चिम में त्रिशकुनि एवं दक्षिण में कौशल स्थित हैं। देहस्थ अध्यात्म वाक्चक्र में क्रमशः पूर्व, उत्तर, पश्चिम एवं दक्षिण दिशा में कक्ष, स्तन, नाभि एवं नासिकाग्र भाग संगृहीत हैं। कोणों में आग्नेय दिशा में कलिंग, नैर्ऋत्य में लंपाक, वायव्य में कांची एवं ऐशान्य में हिमालय स्थित हैं। देहस्थ अध्यात्म वाक्चक्र की आग्नेयादि दिशाओं में क्रमशः मुख, कण्ठ, हृदय एवं मेढ्र स्थित हैं। क्रमशः इन सभी क्षेत्रोपक्षेत्रादि पीठ स्थानों में अंकुरिक, वज्रजटिल, महावीर, वज्रहूंकार, सुभद्रगुण, वज्रभद्रा, महाभैरव, और विरूपाक्ष नामक डाकिनियां विद्यमान हैं। स्वदेहस्थ वाक्चक्र में महानाडी, नाडी, प्रभानाडी, हलानाडी, महानाडी, सौख्यनाडी, तनानाडी एवं सितानाडी स्थित हैं, जो क्रमशः अक्षिवाह, पित्तवाह, फुफ्फुसवाह, अन्त्रमालावाह, वति(स्ति)वाह(?), बलवाह, पुरीषवाह और सीमान्तवाहात्मक हैं। बाह्य वाक्चक्र में ये ऐरावती, महाभैरवी, वायुवेगा, सुराभक्षी, श्यामादेवी, सुभद्रा, हयकर्णा एवं खगानना नामक वीरेश्वरियों के रूप में स्थित हैं। वाक्चक्र का बोधक बीजाक्षर मन्त्र 'आ' है और यह संभोगकाय का द्योतक है। इस चक्र में स्थित डाकिनियाँ एवं वीरेश्वरियाँ भूचरी एवं मर्त्यलोकवासिनी हैं। वाक्चक्र के स्वरूप को स्पष्टतया तालिका की संख्या 9 से 16 तक के क्रमों से जाना जा सकता है।

**III कायचक्र**

कायचक्र का स्वरूप शुक्लवर्ण चक्रावली है। इस चक्र को आठों दिशाओं में मेलापक, उपमेलापक, श्मशान और उपश्मशान के पीठ हैं। इस चक्र में पूर्व में प्रेतपुरी, उत्तर में गृहदेवता, पश्चिम में सौराष्ट्र एवं दक्षिण में सुवर्णद्वीप स्थित हैं। कोणों में आग्नेय में नगर, नैर्ऋत्य में सिन्धु, वायव्य में मेरु एवं ऐशान्य में कुलता पीठस्थान स्थित हैं। अध्यात्म कायचक्र की दिशाओं में क्रमशः लिंग, गुदा, ऊरुद्वय, जंघाद्वय, अंगुलि, पादपृष्ठ, अंगुष्ठ एवं जानुद्वय स्थित हैं। कायचक्र की आठों वलियों में महाचण्ड, रत्नवज्र, हयग्रीव, आकाशगर्भ, श्रीहेरुक, पद्मनर्तेश्वर, वैरोचन, वज्रसत्त्व नामक डाकिनियाँ विद्यमान हैं। देहस्थ अध्यात्म कायचक्र में नाडी, नटीनाडी, स्फुटानाडी, लतानाडी, बलानाडी, शठानाडी, गणानाडी, समानाडी स्थित हैं, जो क्रमशः श्लेष्मवाह, पूयवाह, लोहितवाह,

स्वेदवाह, मेदावाह, अश्रुवाह, खेटवाह एवं बलसिंघाणवाहात्मक हैं। बाह्य कायचक्र में ये चक्रवेगा, खण्डरोहा, शौण्डिनी, चक्रवर्मिणी, सुवीरा, महाबला, चक्रवर्तिनी एवं महावीर्या वीरेश्वरियों के रूप में स्थित हैं। कायचक्र का बोधक मन्त्र 'ॐ' है और यह निर्माणकाय का द्योतक भी है। इस चक्र में स्थित डाकिनियाँ एवं वीरेश्वरियाँ पातालवासिनी हैं। इन्हें तालिका में संख्या 17 से 24 तक के क्रमों में दर्शाया गया है।

तालिकोक्त काय-वाक्-चित्त चक्र हेरुक रूप हैं। ये देहस्थ एवं बाह्य मण्डल में अवस्थित हैं। इस विश्वरूप मण्डल के पूर्व में काकास्या, उत्तर में उलूकास्या, पश्चिम में श्वानास्या एवं दक्षिण में शूकरास्या विद्यमान हैं। आग्नेयादि कोणों में यमदाढी, यममथनी, यमदंष्ट्रिणी एवं यमदूती स्थित हैं। इस मण्डल के चारों द्वारों पर डाकिनी, लामा, खण्डरोहा एवं रूपिणी स्थित हैं। इसे निम्न तालिका में प्रस्तुत किया जा रहा है—



| | दिशा | देहस्थपीठ | बाह्यपीठ | पीठ | | चक्र | स्वरूप | बीजाक्षर |
|---|---|---|---|---|---|---|---|---|
| 1 | पूर्व | शिर | पुल्लीरमलय | पीठ | खेचरी | चित्तचक्र | अष्टार नील वर्ण वज्रावलि | पं |
| 2 | पश्चिम | शिखा | जालन्धर | | | | | जं |
| 3 | उत्तर | दक्षिणकर्ण | ओडियान | | | | | ओं |
| 4 | दक्षिण | पृष्ठवंश | अर्बुद | | | | | आं |
| 5 | आग्नेय | वामकर्ण | गोदावरी | उपपीठ | | | | गों |
| 6 | नैर्ऋत्य | भ्रूमध्य | रामेश्वर | | | | | रां |
| 7 | वायव्य | चक्षु(द्वय) | देवीकोट | | | | | दं |
| 8 | ऐशान्य | बाहूमूल (स्कन्ध) | मालव | | | | | मां |
| 9 | पूर्व | कक्ष(द्वय) | कामरूप | क्षेत्र | भूचरी | वाक्चक्र | रक्तपद्मावलि | कां |
| 10 | उत्तर | स्तन | ओड्र | | | | | ओं |
| 11 | पश्चिम | नाभि | त्रिशकुनि | उपक्षेत्र | | | | त्रिं |
| 12 | दक्षिण | नासिकाग्र | कौशल | | | | | कां |
| 13 | आग्नेय | मुख | कलिंग | छन्दोह | | | | कां |
| 14 | नैर्ऋत्य | कण्ठ | लंपाक | | | | | लां |
| 15 | वायव्य | हृदय | कांची | उपछन्दोह | | | | कां |
| 16 | ऐशान्य | मेढ्र | हिमालय | | | | | ह्रीं |
| 17 | पूर्व | लिंग | प्रेतपुरी | मेलापक | पाताल-वासिनी | कायचक्र | शुक्लवर्ण चक्रावलि | प्रं |
| 18 | उत्तर | गुद | गृहदेवता | | | | | गृं |
| 19 | पश्चिम | ऊरु(द्वय) | सौराष्ट्र | उपमेलापक | | | | सां |
| 20 | दक्षिण | जंघा(द्वय) | सुवर्णद्वीप | | | | | सुं |
| 21 | आग्नेय | अंगुली | नगर | श्मशान | | | | नं |
| 22 | नैर्ऋत्य | पादपृष्ठ | सिन्धु | | | | | सिं |
| 23 | वायव्य | अंगुष्ठ | मेरु | उपश्मशान | | | | मं |
| 24 | ऐशान्य | जानु | कुलता | | | | | कं |

## तालिका

| डाकिनी | नाडीकृत्य | नाडी | वीरेश्वरी | भूमि | पारमिता | ज्ञान | मन्त्र | काय |
|---|---|---|---|---|---|---|---|---|
| शिखण्डकपालि | नखदन्तवाह | अजानाडी | प्रचण्डा | प्रमुदिता | दान | दुःखज्ञान | हूं | धर्म |
| महाकंकाल | केशरोमवाह | नाडी | चण्डाक्षी | | | | | |
| कंकाल | त्वग्वाह | महानाडी | प्रभामती | | | | | |
| विकटद्रंष्ट्री | मांसवाह | नाडी | महानासा | | | | | |
| स्वरवैरिण | स्नायुवाह | रजानाडी | विरमती | विमला | शील | समुदयज्ञान | | |
| अमिताभ | अस्थिवाह | पटानाडी | खर्वरी | | | | | |
| वज्रप्रभा | रक्तवाह | भगानाडी | लंकेश्वरी | | | | | |
| वज्रदेह | हृदयवाह | छोतानाडी | द्रुमच्छाया | | | | | |
| अंकुरिक | अक्षिवाह | महानाडी | ऐरावती | प्रभाकरी | क्षान्ति | निरोधज्ञान | आ | संभोग |
| वज्रजटिल | पित्तवाह | नाडी | महाभैरवी | | | | | |
| महावीर | फुफ्फुसवाह | प्रभानाडी | वायुवेगा | अर्चिष्मती | वीर्य | मार्गज्ञान | | |
| वज्रहूंकार | अन्त्रमालावाह | हलनाडी | सुराभक्षी | | | | | |
| सुभद्रगुण | बस्तिवाह | महानाडी | श्मामादेवी | अभिमुखी | ध्यान | क्षयज्ञान | | |
| वज्रभद्रा | बलवाह | सौख्यदानाडी | सुभद्रा | | | | | |
| महाभैरव | पुरीषवाह | तनानाडी | हयकर्णा | सुदुर्जया | प्रज्ञा | अनुत्पाद० | | |
| विरूपाक्ष | सीमन्तवाह | सितानाडी | खगानना | | | | | |
| महाचण्डा | श्लेष्मवाह | नाडी | चक्रवेगा | दूरंगमा | उपाय | धर्मज्ञान | ॐ | निर्माण |
| रत्नवज्र | पूयवाह | नटीनाडी | खण्डरोहा | | | | | |
| हयग्रीव | लोहितवाह | स्फुटानाडी | सौण्डिनी | अचला | प्रणिधान | अद्वयज्ञान | | |
| आकाशगर्भ | स्वेदवाह | लतानाडी | चक्रवर्मिणी | | | | | |
| श्रीहेरुक | मेदावाह | बलानाडी | सुवीरा | साधुमती | बल | संवृतिज्ञान | | |
| पद्मनर्तेश्वर | अश्रुवाह | शठानाडी | महाबला | | | | | |
| वैरोचन | खेटावाह | गणानाडी | चक्रवर्तिनी | धर्ममेघा | ज्ञान | परचित्त० | | |
| वज्रसत्त्व | बलसिंघाणवाह | समानाडी | महावीर्या | | | | | |

# बौद्ध तन्त्रों की कुछ मुद्राएँ (२)

—जनार्दन पाण्डेय—

'धी:' के प्रथम अङ्क में साधनमाला एवं योगाम्बरतन्त्र से तथा बौद्धेतर ग्रन्थों में शारदा-तिलक एवं परशुरामकल्पसूत्र से 122 मुद्राओं के लक्षण उद्धृत किये गये थे, प्रस्तुत अंक में मञ्जुश्री-मूलकल्प से 88 मुद्राओं के लक्षण दिये जा रहे हैं। इस ग्रन्थ का प्रथम संस्करण त्रिवेन्द्रम् संस्कृत सीरीज से 1920, 1922, व 1925 ई० में तीन खण्डों में प्रकाशित हुआ था। द्वितीय संस्करण मिथिला विद्यापीठ, दरभङ्गा ( बिहार ) से 1964 ई० में प्रकाशित हुआ है। यहाँ प्रत्येक मुद्रालक्षण की पृष्ठसंख्या द्वितीय संस्करण से दी गई है।

## सामान्य मुद्रानुक्रमणी

| | |
|---|---|
| अग्निकर्मप्रसाधिका | दंष्ट्र |
| अङ्कुश | द्विलिङ्ग |
| अर्धचन्द्र | धनुः |
| उत्पल | धर्मचक्र |
| एकशिखा | धर्मभेरी |
| कलश | ध्वज |
| कुन्त | नमस्कार |
| कुम्भ | नाराच |
| केतु | पञ्चशिखा |
| खखर | पट |
| खड्ग | पटह |
| गज | पट्टिश |
| गदा | पद्म |
| घण्टा | पद्मालया |
| चिन्तामणिरत्नमहामुद्रा | परशु |
| छत्र | पर्यङ्क |
| तद्गतचारिणी | पात्र |
| तोमर | पाश |
| त्रिशिखा | पीठ |

| | |
|---|---|
| पुण्डरीक | लिङ्ग |
| पूर्ण | वक्र |
| प्रज्ञापारमिता | वज्र |
| फर | वज्रदण्ड |
| भद्रपीठ | वरद |
| भिण्डिपाल | वरहस्त |
| भेरी | विमान |
| मनोरथ | वीण |
| मयूरासन | शक्ति |
| महाशूल | शङ्कल |
| माला | शङ्ख |
| मीषितोरण | शतघ्ना |
| सुतोरण | शयन |
| मुद्गर | शूल |
| मुसल | समलिङ्ग |
| यमल | सम्पुट |
| यष्टि | सम्पुटा |
| रज्जु | स्यन्दन |
| लाङ्गल | स्वस्तिक |

## विभिन्न देवताओं की समय मुद्राएँ

| | |
|---|---|
| अवलोकितेश्वर समयमुद्रा | तेजोराशि महामु० |
| आर्यभृकुटी समयमु० | धर्मचक्र महामु० |
| उष्णीषराज समयमु० | बुद्धस्य खखरमु० |
| एकाक्षरचक्रवर्ती महामूलमु० | बुद्धस्य समयमु० |
| तारासमय मु० | मञ्जुश्रीकुमारस्य समयमु० |
| | महावज्रासन मूलमु० |

## मुद्राओं के लक्षण

**अग्निकर्मप्रसाधिका**

तदेव हस्तौ संकोच्य मुक्त्वा वेणिं समुच्छ्रयेत् ।
तदेव विधिना बद्ध्वा अन्येनाङ्गुष्ठमध्ययोः ॥

मध्यपर्वं समाश्लिष्य उभयाग्रद्यं करं पुनः ।
दत्त्वाऽभिमुखं ह्यग्नेर्वह्निमन्त्रसुयोजितः ॥
आवाहयेच्छिखिनं होमे अग्निकर्मसु सर्वदा ।
विसर्जयेदनेनैव तर्जन्यग्रविमिश्रितैः ॥
अङ्गुष्ठे नित्यमाश्लिष्टे विसर्ज्यं वह्निदैवतम् ।
मुद्रा बहुमता ह्येषा अग्निकर्मप्रसाधिका ॥
तदेव = शङ्कलावदेव । ( मञ्जुश्रीमूलकल्पे 33.172-175, पृ० 288 )

**अङ्कुश**

तदेव हस्तौ विन्यस्तौ उभौ कृत्वा तु तत्समौ ।
वामपाणोपरि न्यस्तदक्षिणं तु करं तथा ॥
तदेवमङ्कुशाकारं मध्यमाङ्गुलितर्जनी ।
मध्यमं पर्वमाश्लिष्य तर्जनी कारयेदङ्कुशम् ॥
तदेव = पाशवदेव । ( म० मू० क० 33.100-101, पृ० 283 )

**बौद्धेतर ग्रन्थों में अङ्कुश मुद्रा**

दक्षमुष्टिगृहीतस्य वाममुष्टेस्तु मध्यमाम् ।
प्रसार्य तर्जन्याकुञ्चेत् सेयमङ्कुशमुद्रिका ॥
( शारदातिलकटीका 4.4, पृ० 135 )

**अर्धचन्द्र**

तदेव हस्तौ विन्यस्तौ संश्लिष्याङ्गुलिभिः समम् ।
सम्पुटाकोशविन्यस्तं तर्जन्येकं तु दक्षिणम् ॥
कुर्यात्तु वक्रतो ह्यग्रे अर्द्धचन्द्रं(न्द्रः) स उच्यते ॥
तदेव = शयनवदेव । ( म० मू० क० 33.293, पृ० 293 )

**उत्पल**

तदेव करसंयुक्तौ विन्यस्तं अङ्गुलीचितम् ।
उभौ तर्जन्यौ संकोच्य सूच्यादञ्जलिसादृशम् ॥
विन्यस्ताङ्गुष्ठयुगले मध्याङ्गुष्ठौ प्रसारितौ ।
अनामिकां वेष्टयित्वा तु उत्पलेति उदाहृतम् ॥
तदेव = एकशिखावदेव । ( म० मू० क० 33·52-53, पृ० 279 )

**एकशिखा**

तदेव हस्तौ विन्यस्तौ कुर्यादेकशिखं तथा।
मध्यमाङ्गुलिसंश्लिष्टौ भवेदेकशिखा ध्रुवम् ॥
तदेव = त्रिशिखावदेव। ( म० मू० क० 33.49, पृ० 279 )

**कलश**

तदेव खखरं ईषदवनाम्यं तु शोभनम्।
कुर्यादङ्गुष्ठविन्यस्तं कलशं तदिहोच्यते ॥
( म० मू० क० 33.155, पृ० 286 )

**कुन्त**

पुनः प्रसारयंस्तदेकं तु दक्षिणं करमुत्तमम्।
कुर्यात् सूचिकाकारं मध्यतर्जनिमङ्गुलौ ॥
ईषत्संकुचिताग्रं तु अङ्गुलीनां नतोत्तमम्।
स्थितिकां कारयेत् तत्र सुन्यस्तं तर्जनी तु तम् ॥
कुर्यात् संश्लेषिते तत्र अनामिकापर्वमिश्रिता।
मुद्रेयं कुन्तनिर्दिष्टा बहुधा लोकनायकैः ॥
( म० मू० क० 33.226-228, पृ० 292 )

**कुम्भ**

उभौ संपुटौ कृत्वा हस्तौ विन्यस्तशोभनौ।
अङ्गुलिमङ्गुलीभिश्च अन्योन्याग्रश्लेषितौ ॥
उत्थितां नाभिं संकोच्य कुम्भमुद्रमुदाहृतम्।
( म० मू० क० 33.152-153, पृ० 286 )

**बौद्धेतर ग्रन्थों में कुम्भ मुद्रा**

दक्षाङ्गुष्ठे पराङ्गुष्ठं क्षिप्त्वा हस्तद्वयेन तु।
सावकाशात्मकं मुष्टिं कुर्यात् कुम्भस्य मुद्रिका ॥
( शारदातिलकटीका 4.4, पृ० 235 )

**केतु**

तदेवमङ्गुलिभिर्वेष्ट्य अङ्गुष्ठौ उपरिस्थितौ।
न्यस्य पर्वतले न्यस्तं केतुमित्याहुर्मुद्रितम् ॥
तदेव = अभयमुद्रावदेव। ( म० मू० क० 33.198, पृ० 290 )

खड्ग

तथैव खड्गनिर्दिष्टा अनामिकाग्रैः सुकोचितैः।
तथैव = गदावदेव। ( म॰ मू॰ क॰ 33.94, पृ॰ 282 )

गज

तदेव हस्ततलम् ऊर्ध्वं दक्षिणं वामतोच्छ्रितम्।
अधस्तात् कारयित्वा तु गजाकारं सुयोजितम्॥
दक्षिणमध्यमाङ्गुल्यां कराकारं तु कारयेत्।
एतद् गजमुद्रं तु निर्दिष्टं संसारपारगैः॥
तदेव = धर्मभेरीवदेव। ( म॰ मू॰ क॰ 33.191-192, पृ॰ 289 )

गदा

तदेव हस्तौ विन्यस्तौ संश्लिष्टावङ्गुलीभिः तत्।
गदाकारं तदा कुर्यान्मूलेनापि वेष्टितम्॥
उभयोरङ्गुष्ठयोर्मध्ये कन्यसीभिः सुवेष्टितम्।
षड्भिरङ्गुलिभिः कुर्यात् शून्याकारं सुशोभनम्॥
एतन्मुद्रा गदा प्रोक्ता सर्वदानवनाशिनी॥
तदेव = फरवदेव। ( म॰ मू॰ क॰ 33.90-92, पृ॰ 282 )

**बौद्धेतर ग्रन्थों में गदामुद्रा**

वाममुष्ट्यन्तरेऽङ्गुष्ठे दक्षिणे सरलाङ्गुलीः।
वामाङ्गुष्ठः स्पृशेदग्रे योजितः सरलोदरः॥
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुलीः।
अङ्गुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते॥
गदा मुद्रेयमाख्याता भुक्तिमुक्तिकरी तथा।
( शारदातिलकटीका 15.10, पृ॰ 608 )

घण्टा

तथैव हस्तौ कुर्वीत प्रसारिताग्रं तु कुञ्चितम्।
शरावाकारसमौ कृत्वा अङ्गुलीभिः समन्ततः।
घण्टां तु विदुर्बुद्धाः प्रकाशयामास देहिनाम्॥
तथैव = खड्गवदेव। ( म॰ मू॰ क॰ 33.95, पृ॰ 282 )

**चिन्तामणिरत्नमहामुद्रा**

तदेव हस्तौ करसंपुटाकारौ सविचित्रवेणिकाबद्धौ ललाटदेशे स्थापयेत्, चित्रहस्तं तदेव भगवतां बुद्धानां चिन्तामणिरत्नमहामुद्रा ।

तदेव = खखरवदेव । ( म० मू० क० 34, पृ० 306 )

**छत्र**

तदेव हस्तं विन्यस्तं यष्ट्याकारसमुच्छ्रितम् ।
दक्षिणं तु करं कृत्वा विसृतं छत्रमुच्यते ॥

तदेव = यष्टिवदेव । ( म० मू० क० 33.70, पृ० 281 )

**तद्गतचारिणी**

तदेव हस्तौ संयुक्तौ संपुटाकारशोभनौ ।
उच्छ्रितौ मध्यमाङ्गुल्यौ मुद्रा तद्गतचारिणी ॥

तदेव = वरहस्तवदेव । ( म० मू० क० 33.197, पृ० 290 )

**तोमर**

तदेव मुद्गरमीषच्चालयेत् करसंपुटे ।
तोमरं कथितं ह्यग्रं मुद्रं शक्रविनाशनम् ॥

तदेव = मुद्गरवदेव । ( म० मू० क० 33.149, पृ० 286 )

**त्रिशिखा**

तथैव हस्तौ विन्यस्तौ कुर्यात् तत्करसंपुटम् ।
तत्रैव त्रिशिखं कुर्यात् अङ्गुलीभिर्विमिश्रितम् ॥
उभौ हस्तौ यदाङ्गुष्ठौ शून्याकारौ तु मिश्रितौ ।
मध्यमानामिके चैव विपरीताकारवेणिके ।
एतत् तत् त्रिशिखं ज्ञेयं त्रिचोराकार इति पुनः ॥

तथैव = पञ्चशिखावदेव । ( म० मू० क० 33.45-47, पृ० 279 )

**दंष्ट्र, वक्र**

उत्पलं तु ततो बद्ध्वा अनामिकाङ्गुलिभिस्तथा ।
अधस्तादङ्गुष्ठयोर्मध्ये विन्यस्तं च प्रदर्शितम् ॥
एतद् दंष्ट्रमिति प्रोक्तं विवृते वक्रमुच्यते ॥

( म० मू० क० 33.150, पृ० 286 )

